# KASHMIR SERIES OF TEXTS AND STUDIES.

No. XLIII.

THE

# SHIVASUTRA—VARTIKAM

BY

**VARADARAJA.**

EDITED

WITH PREFACE AND FOREWORD

BY

PANDIT MADHUSUDAN KAUL, SHASTRI, M. A., M. O. L.,

SUPERINTENDENT OF THE RESEARCH DEPARTMENT,

JAMMU AND KASHMIR STATE,

SRINAGAR.

PUBLISHED UNDER THE AUTHORITY

OF THE GOVERNMENT

OF HIS HIGHNESS LIEUT.-GENERAL MAHARAJA

SIR PRATAP SINGH SAHIB BAHADUR

G. C. S. I., G. C. I. E., G. B. E., LL D.,

MAHARAJA OF JAMMU AND KASHMIR STATE.




Srinagar

PRINTED AT THE KASHMIR PRATAP STEAM PRESS.

1925.

श्रीसोमानन्दनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेश्यान्
देशेऽन्यस्मिन्नदृष्टो घुसृणविसरवत्सर्ववन्द्यत्वमाप ॥ १ ॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥

ॐ

काश्मीरसंस्कृतग्रन्थावलिः ।

—=०-:※:-०=—

ग्रन्थाङ्कः ४३

# शिवसूत्रवार्तिकम्

वरदराजकृतम्

श्रीभारतधर्ममार्तण्ड—कश्मीरमहाराज-
श्रीप्रतापसिंहवरप्रतिष्ठापिते
प्रत्नविद्याप्रकाश (रिसर्च) कार्यालये
तदध्यक्ष-पण्डित-मधुसूदन कौल-शास्त्रिणा
तद्दिष्टकार्यालयस्थपण्डितसहायेन
संगृह्य, संशोधनादिसंस्करणोत्तरं
पाश्चात्यविद्वत्परिषत्संमताधुनिकसुगमशुद्धरीत्युपन्याससंस्कारैः परिष्कृत्य
श्रीनगरे
"कश्मीर प्रताप स्टीम प्रेस" मुद्रणालये मुद्रापयित्वा प्रकाश्यं नीतम् ।




संवत् १९८२ खैस्ताब्दः १९२५

काश्मीर-श्रीनगर

# PREFACE.

The number forty-three of the Kashmir Series of Texts and Studies, which is being placed now before the students of the Shaiva philosophy, contains a metrical exposition by Varadaraja of the Shivasutras. It is at once clear and concise, as all works bearing the imprint of the Vartika are expected to be. Its present edition is based on the transcript prepared by the departmental Pandits from the original manuscript kindly lent out by Pandit Raghunath Godabole, a renowned Sanskrit scholar from Bombay side. It is, from the beginning to the end, fraught with various mistakes.

The preparation of the text, therefore, seemed at the outset rather hazardous. But later on, prompted by the desire to bring it out, I tried all possible means of constructing the text. First, I carefully looked into the quotations from the Vartika given by the learned scholar and writer, Bhasvaranandanatha alias Bhaskararaya, in his commentary on the Lalitasahasranama. Their condition, I am sorry to record, is as deplorable as, or worse than, that of the text I had to handle. What helped me to steer safely through the blunders and to arrive at a comparatively better state of the text was

the careful examination of the Shivasutra-vimarshini, a commentary by Kshemaraja on the Shivasutras.

Here I have to record my thanks to Rajanaka Maheshvara, a pandit of this Department, who, as usual, helped me to a fairly good extent in bringing out the Shivasutra-vartika of Varadaraja.

Srinagar, Kmr.<br>July 23, 1925. } Madhusudan Kaul.

# FOREWORD.

Little need be said on the philosophical contents of the Vartika, as the reader is already made aware of them in the Shivasutra-vimarshini and allied works brought out by this Department It is written entirely in the light of the interpretation given to the Shivasutras by Kshemaraja in the Shivasutra-vimarshini. Varadaraja also puts his faith in the traditional history of the origin of the Shivasutras.

The Shivasutra-vartika, forming No. 7 of the Series, by Bhatta Bhaskara who claims to have inherited an accurate interpretation of the sutras through a succession of teachers from Bhatta Kallata, one of the chief disciples of Vasugupta, differs from the present one inasmuch as Varadaraja depends entirely on the interpretation of Kshemaraja.

Both Kshemaraja and Bhatta Bhaskara, though laying claim to one common source, differ from each other in their views as to the meaning of the sutras. In absence of any extant work on the sutras by Kallata, it is very difficult to decide which of the two authors inherited the true traditional interpretation. But differences in their respective expositions lead one to suppose either that the distance of time, that elapsed

between Kallata on the one hand and Kshemaraja and Bhatta Bhaskara on the other, had distanced the true tradition from the both or that both the interpretations existed even at the time of Kallata. A careful study of the two Vartikas will show the reader the differences between the two interpretations of the sutras.

The date of the author.

The date of Varadaraja alias Krishnadas, the author of this work, is not positively known. All that can be said with regard to it is that he lived sometime before the beginning of the 16th century A. C. The reason for the assertion is that Bhaskararayâ, the commentator of the Lalitasahasranama and a contemporary of Narayana Bhatta, belonged to the latter half of the same century according to the statement of Kamalakara Bhatta, the author of the Nirnayasindhu and grandson to Narayana Bhatta.

Family connection of the author with Bhaskararaya.

In the closing lines of his Vartika, Varadaraja gives a short description of his parentage. He says that he was the youngest son of Madhuraja. The appearance of the word 'raja' in the names Madhuraja and Varadaraja on the one hand and Gambhiraraja and Bhaskararaja on the

other tempts one to surmise that all the four persons named above belonged to the same family and, therefore, Varadaraja was one of the ancestors of Bhaskararaja. The reverent attitude with which Bhaskararaya refers to him and quotes his passages in season and out of season in the Bhashya on the Lalitasahasranama strengthens the surmise.

Srinagar, Kmr.
23 July, 1925.

Madhusudan Kaul.

ॐ नमः परप्रकाशवपुषे शिवाय ।

अथ

# श्रीशिवसूत्राणि ।

—=:-◯०◯-:=—

कृष्णदासापरपर्यायवरदराज-
विरचितवार्तिकोपेतानि ।

—=०-:※:-०=—

## प्रथम उन्मेषः

नागबोध्यादिभिः सिद्धैर्नास्तिकानां पुरःसरैः ।
आक्रान्ते जीवलोकेऽस्मिन्नात्मेश्वरनिरासकैः ॥ १ ॥
रहस्यसम्प्रदायोऽयं मा विच्छेदीत्यतुच्छया ।
स्वेच्छया शिवसूत्राणि समालिख्य शिलातले ॥ २ ॥
महादेवगिरौ स्वप्ने माहेश्वरशिखामणेः ।
उपदिश्य प्रभुः श्रीमानुमया संप्रयोजितः ॥ ३ ॥
दयया स्वयमेवासीद्देशिको यस्य शङ्करः ।
दैशिकं दैशिकानां तं वसुगुप्तं प्रभुं नुमः ॥ ४ ॥
महामाहेश्वरश्रीमत्क्षेमराजमुखोद्गताम् ।

अनुसृत्यैव सद्वृत्तिमञ्जसा क्रियते मया ॥ ५ ॥
वार्तिकं शिवसूत्राणां वाक्यैरेव तदीरितैः ।

---

तत्र नरेशनैकात्म्यवादिनां प्रातिकूल्यतः ॥ ६ ॥
चित्क्रियात्मकचैतन्यमूर्तिर्जीवजडात्मनः ।
परमः शिव एवात्मा प्रपञ्चस्येति कथ्यते ॥ ७ ॥

## चैतन्यमात्मा ॥ १ ॥

चैतन्यं चित्क्रियारूपं शिवस्य परमस्य यत् ।
स्वातन्त्र्यमेतदेवात्मा ततोऽसौ परमः शिवः ॥ ८ ॥
अथवा कोऽयमात्मेति प्रष्टॄन् बोधयितुं शिशून् ।
नात्मा देहो नच प्राणो न मनः खं न शून्यभूः ॥ ९ ॥
किन्तु चैतन्यमेवात्मेत्यादिष्टं परमेष्ठिना ।
अथ चैतन्यमेवैतदात्मा स्वाभाविकं वपुः ॥ १० ॥
विशेषाचोदनादस्य जगतश्चेत्यरूपिणः ।
अचेत्यमानं कस्यापि वपुः किमपि नो भवेत् ॥ ११ ॥
चेत्यमानं तु चिद्रूपतादात्म्याच्चिन्मयं भवेत् ।
एवं शिवोक्तया नीत्या जङ्गमस्थावरात्मनः ॥ १२ ॥
चैतन्यमेव विश्वस्य स्वरूपं पारमार्थिकम् । ॥ १ ॥

---

नन्वेवंविधविश्वस्य चैतन्यं चेद्वपुस्तदा ॥ १३ ॥
कथं बन्धस्य संबन्ध इति शङ्कां व्यपोहितुम् ।
प्रश्लेषाश्लेषपाठाभ्यां सूत्रमाह महेश्वरः ॥ १४ ॥

## ज्ञानं बन्धः ॥ २ ॥

अज्ञानमिति तत्राद्यं चैतन्यस्फाररूपिणि ।
आत्मन्यनात्मताज्ञानं ज्ञानं पुनरनात्मनि ॥ १५ ॥
देहादावात्ममानित्वं द्वयमप्येतदाणवम् ।
मलं स्वकल्पितं स्वस्मिन्बंधः स्वेच्छाविभावितः ॥ १६ ॥ २ ॥

---

किमाणवमलात्मैव बन्धोऽयं, नेत्युदीर्यते ।

## योनिवर्गः कलाशरीरम् ॥ ३ ॥

योनिर्भेदप्रथाहेतुर्माया वर्गस्तदुत्थितः ॥ १७ ॥
कलादिक्षितिपर्यन्ततत्त्वराशिस्तदात्मकः ।
मायीयाख्यं मलं तत्तद्भिन्नवेद्यप्रथामयम् ॥ १८ ॥
कलेति कायमाविश्य परिच्छेदकरी नृणाम् ।
व्यापृतिः पुण्यपापात्मा शरीरं यस्य तत्पुनः ॥ १९ ॥
कार्मं च मलमेतस्मिन्द्वये बन्धोऽनुवर्तते ।
ईश्वरप्रत्यभिज्ञायामुक्तमेतन्मलत्रयम् ॥ २० ॥
'स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता ।
द्विधाणवं मलमिदं स्वस्वरूपापहारतः ॥ २१ ॥
भिन्नवेद्यप्रथात्रैव मायीयं, जन्मभोगदम् ।
कर्तर्य्यबोधे कार्मं तु, मायाशक्त्यैव तत्त्रयम् ॥' २२ ॥

---

इत्यथैषां मलानां तु बन्धकत्वं निरूप्यते ।

## ज्ञानाधिष्ठानं मातृका ॥ ४ ॥

अपूर्णम्मन्यतारूपं भिन्नवेद्यप्रथात्मकम् ॥ २३ ॥
शुभाशुभात्मकाशेषकर्मसंस्कारविग्रहम् ।
त्रिविधं मलमुक्तं यत्तदेव ज्ञानमुच्यते ॥ २४ ॥
'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते ॥' २५ ॥
इत्युक्तनीत्या ज्ञानस्य विविधस्यास्य मातृका ।
अकारादिक्षकारान्तपञ्चाशद्वर्णविग्रहा ॥ २६ ॥
शिवादिक्षितिपर्यन्ततत्त्वग्रामप्रसूतिभूः ।
'करंध्रचितिमध्यस्था ब्रह्मपाशावलम्बिकाः ॥ २७ ॥
पीठेश्वर्यो महाघोरा मोहयन्ति मुहुर्मुहुः ।'
इतिश्रीतिमिरोद्घाटप्रोक्तनीत्यनुसारतः ॥ २८ ॥
स्वरादिवर्गाधिष्ठातृमातृचक्रपरिष्कृता ।
अपूर्णोऽहमहं पूर्णोऽहं कृशोऽहं कृशेतरः ॥ २९ ॥
इति शब्दानुवेधेन शोकहर्षादिकारिका ।
अधिष्ठानमधिष्ठात्री, तदधिष्ठानतो नृणाम् ॥ ३० ॥
अलब्धान्तर्मुखस्वात्मविश्रान्तीनि निरन्तरम् ।
बहिर्मुखानि ज्ञानानि कथ्यन्ते बन्धहेतवः ॥ ३१ ॥ ४ ॥

---

अथेदृग्बन्धसंबन्धप्रशमोपाय उच्यते ।
परमोपेयविश्रान्तिसतत्त्वः परमेष्ठिना ॥ ३२ ॥

## उद्यमो भैरवः ॥ ५ ॥

योऽयं विमर्शरूपायाः प्रसरन्त्याः स्वसंविदः ।
झटित्युच्छलनाकारप्रतिभोन्मज्जनात्मकः ॥ ३३ ॥
उद्यमोऽन्तःपरिस्पन्दः पूर्णाहम्भावनात्मकः ।
स एव सर्वशक्तीनां सामरस्यादशेषतः ॥ ३४ ॥
विश्वतो भरितत्वेन विकल्पानां विभेदिनाम् ।
अलं कवलनेनापीत्यन्वर्थादेव भैरवः ॥ ३५ ॥ ५ ॥

---

अथेदृग्भैरवापत्तेर्बन्धप्रशमकारणात् ।
व्युत्थानं च भवेच्छान्तभेदाभासमितीर्यते ॥ ३६ ॥

## शक्तिचक्रसन्धाने विश्वसंहारः ॥ ६ ॥

योऽयमुक्तः स्वसंवित्तेरुद्यमो भैरवात्मकः ।
अस्यास्ति महती शक्तिरतिक्रान्तक्रमाक्रमा ॥ ३७ ॥
निःशेषनिजचिच्छक्तिचक्राक्रमणलम्पटा ।
रिक्तारिक्तोभयाकाराप्यनेतद्रूपिणी परा ॥ ३८ ॥
यथैव स्वात्मचिद्भित्तौ प्रमेयोल्लासनादितः ।
परप्रमातृविश्रान्तिपर्यन्तस्पन्दरूपया ॥ ३९ ॥
सृष्टिस्थितिलयानाख्याभासाशक्तिप्रसारणात् ।
प्रपञ्चविषयं चञ्चत्पञ्चकृत्यं प्रपंचितम् ॥ ४० ॥
तया प्रसारितस्यास्य शक्तिचक्रस्य यत्पुनः ।
सन्धानमान्तराम्नायाम्नातक्रमविमर्शनम् ॥ ४१ ॥
तस्मिन्सत्यस्य विश्वस्य कालाग्न्यादिकलावधेः ।
संहारः स्यात्स्वसंवित्तिवह्निसद्भावलक्षणः ॥ ४२ ॥ ६ ॥

---

एवं स्वसंवित्कालाग्निप्लुष्टभेदस्य योगिनः ।

न स्यात्समाधिव्युत्थानभेदः कोऽपीति कथ्यते ॥ ४३ ॥

## जाग्रत्स्वप्नसुषुप्तभेदे तुर्याभोगसंभवः ॥ ७ ॥

उद्यमो भैरव इति प्रोक्तरूपं स्फुरद्वपुः ।
तुर्यं नाम परं धाम तदाभोगश्चमत्क्रिया ॥ ४४ ॥
भेदेऽपि जाग्रदादीनां योगिनस्तस्य संभवः ।
अनुस्यूतिः परानन्दरूपा स्यादिति शिष्यते ॥ ४५ ॥ ७ ॥

---

जाग्रदादित्रयं सूत्रत्रयेण लक्ष्यते क्रमात् ।

## ज्ञानं जाग्रत् ॥ ८ ॥

## स्वप्नो विकल्पाः ॥ ९ ॥

## अविवेको माया सौषुप्तम् ॥ १० ॥

ज्ञानं बाह्यावजं जाग्रत् सर्वसाधारणार्थकम् ॥ ४६ ॥
स्वप्नः स्वात्मैव संप्रोक्तो विकल्पाः स्वात्मसंभवाः ।
अविवेको निजाख्यातिर्माया मोहस्तदात्मकः ॥ ४७ ॥
सौषुप्तं, योगिनामेतत्त्रितयं धारणादिकम् ।
ईश्वरप्रत्यभिज्ञायां जागराद्यपि लक्षितम् ॥ ४८ ॥
'शून्ये बुद्ध्याद्यभावात्मन्यहन्ताकर्तृतापदे ।
अस्फुटारूपसंस्कारमात्रिणि ज्ञेयशून्यता ॥ ४९ ॥
साक्षाणामान्तरी वृत्तिः प्राणादिप्रेरिका मता ।
जीवनाख्याथवा प्राणेऽहन्ता पुर्यष्टकात्मिका ॥ ५० ॥

तावन्मात्रस्थितौ प्रोक्तं सौषुप्तं प्रलयोपमम् ।
सवेद्यमपवेद्यं च मायामलयुतायुतम् ॥ ५१ ॥
मनोमात्रपथेऽप्यक्षविषयत्वेन विभ्रमात् ।
स्पष्टावभासा भावानां सृष्टिः स्वप्नपदं मतम् ॥ ५२ ॥
सर्वाक्षगोचरत्वेन या तु बाह्यतया स्थिरा ।
सृष्टिः साधारणी सर्वप्रमातॄणां स जागरः' ॥ ५३ ॥

---

इति विस्तरतः प्रोक्ते लोकयोग्यनुसारतः ।
जागरादित्रयेऽमुष्मिन्नवधानेन जाग्रतः ॥ ५४ ॥
शक्तिचक्रानुसन्धानाद्विश्वसंहारकारणात् ।
तुर्याभोगमयाभेदख्यातिरख्यातिहारिणी ॥ ५५ ॥
स्फुरत्यविरतं यस्य स तद्वाराधिरोहतः ।
तुर्यातीतमयं योगी प्रोक्तचैतन्यमामृशन् ॥ ५६ ॥

## त्रितयभोक्ता वीरेशः ॥ ११ ॥

जागरादित्रयं प्रोक्तशक्तिचक्रानुसन्धितः ।
तुर्यानन्दरसासाराच्छुरितं भेदवर्जनात् ॥ ५७ ॥
आनन्दरसनिर्मग्नं परमं व्योम भावयन् ।
त्रितयस्यास्य यो भोक्ता चमत्कर्ता स योगिराट् ॥ ५८ ॥
'त्रिषु धामसु यद्भोग्यं भोक्ता यश्च प्रकीर्तितः ।
विद्यात्तदुभयं यस्तु स भुञ्जानो न लिप्यते' ॥ ५९ ॥
इत्युक्तनिष्प्रतिद्वन्द्विसंवित्साम्राज्यवैभवः ।
चिद्घनः स्वात्मविज्ञानपरमानन्दनिर्भरः ॥ ६० ॥

वीरेशो येन वीराणां भेदग्रसनकारिणाम् ।
अन्तर्बहिर्विसरतामिन्द्रियाणामधीश्वरः ॥ ६१ ॥ ११ ॥

---

किमस्य परचित्तत्त्वारोहविश्रान्तिसूचिकाः ।
भूमिकाः सन्त्ययं याभिर्याति सर्वोत्तरां स्थितिम् ॥ ६२ ॥
इत्यन्तेवासिहृच्छंकाशान्त्यै सन्तीत्युदीर्यते ।

## विस्मयो योगभूमिकाः ॥ १२ ॥

यथा सातिशयानन्दे कस्यचिद्विस्मयो भवेत् ॥ ६३ ॥
तथास्य योगिनो नित्यं तत्तद्वेद्यावलोकने ।
निःसामान्यपरानन्दानुभूतिस्तिमितेन्द्रिये ॥ ६४ ॥
परे स्वात्मन्यतृप्त्यैव यदाश्चर्यं स विस्मयः ।
स एव खलु योगस्य परतत्त्वैक्यरूपिणः ॥ ६५ ॥
भूमिकास्तत्क्रमारोहपरविश्रान्तिसूचिकाः ॥ १२ ॥

---

ईदृग्विस्मयवद्योगभूमिकारूढचेतसः ॥ ६६ ॥

## इच्छा शक्तिरुमा कुमारी ॥ १३ ॥

परभैरवतां युक्त्या समापन्नस्य शाश्वतीम् ।
तस्यैव योगिनो येच्छा शक्तिः सैव भवत्युमा ॥ ६७ ॥
परा भट्टारिका सैव कुमारीति प्रकीर्तिता ।
सदाशिवादिक्षित्यन्तविश्वसर्गादिलीलया ॥ ६८ ॥
कुमारी कुं महामायाभूमिं मारयतीत्यपि ।

कुमारी चोपभोग्यास्य योगिनो भैरवात्मनः ॥ ६९ ॥
कुमारी नान्यभोग्या च भोक्त्रैकात्म्येन तिष्ठति ।
उमा कुमारी संत्यक्तसर्वासङ्गा महेशितुः ॥ ७० ॥
आराधनपरा तद्वदिच्छा शक्तिस्तु योगिनः ।
अयमेव स्फुटः पाठो दृष्टोऽनुत्तरदैशिकैः ॥ ७१ ॥
व्याख्यातश्च, परैः शक्तितमेतिपठनात्पुनः ।
प्रकर्षो व्याकृतोऽमुष्याः शक्तेर्ज्ञानक्रियात्मतः ॥ ७२ ॥

---

एवमीदृक्प्रभावेच्छाशक्तियुक्तस्य योगिनः ।

## दृश्यं शरीरम् ॥ १४ ॥

यद्यद्दृश्यमशेषं तच्छरीरं तस्य योगिनः ॥ ७३ ॥
अहमित्यपृथक्त्वेन पतिवत्प्रतिभासनात् ।
शरीरं देहधीप्राणशून्यरूपं घटादिवत् ॥ ७४ ॥
दृश्यमेवास्य, पशुवत् द्रष्टृत्वेन न भासते ।
एवं देहे च बाह्ये च सर्वत्रैवास्य योगिनः ॥ ७५ ॥
मयूराण्डरसन्यायात्प्रतिपत्तिरभेदिनी ॥ १४ ॥

---

दृश्यं शरीरतामेति शरीरं चापि दृश्यताम् ॥ ७६ ॥
इत्युक्तं योगिनो यत्तन्न दुर्घटमितीर्यते ।

## हृदये चित्तसंघट्टाद्दृश्यस्वापदर्शनम् ॥ १५ ॥

'हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्' ॥ ७७ ॥

इत्युक्तनीत्या हृदयं विश्वविश्रान्तिभित्तिभूः ।
स्वसंवित् तत्र संघट्टश्चित्तस्य चलतः सतः ॥ ७८ ॥
तदैकात्म्यपरामर्शजागरूकस्वभावता ।
तस्माद्दृश्यस्य विश्वस्य नीलदेहादिरूपिणः ॥ ७९ ॥
स्वापस्यैतदभावस्य शून्यस्यापिच दर्शनम् ।
'स्वाङ्गरूपेषु भावेषु प्रमाता कथ्यते पतिः' ॥ ८० ॥
इति श्रीप्रत्यभिज्ञोक्तनीत्या पत्युरिव प्रभोः ।
स्वाङ्गकल्पतया तस्य यथावत्प्रथनं भवेत् ॥ ८१ ॥ १५ ॥

---

उक्तेऽप्येवं प्रमेयेऽस्मिन्नुपायान्तरमुच्यते ।

**शुद्धतत्त्वसंधानाद्वाऽपशुशक्तिः ॥ १६ ॥**

शुद्धं तत्त्वं परं वस्तु यत्तत्परशिवात्मकम् ॥ ८२ ॥
तत्संधानं प्रपञ्चस्य तन्मयत्वेन भावनम् ।
तेनैव यस्य पश्वाख्या बन्धशक्तिर्न विद्यते ॥ ८३ ॥
तत्सदाशिववत्सोऽपि विश्वस्य जगतः पतिः ॥ १६ ॥

---

शुद्धतत्त्वानुसंधानवत एवास्य योगिनः ॥ ८४ ॥

**वितर्क आत्मज्ञानम् ॥ १७ ॥**

वितर्कः प्रोक्तसंधानध्वस्तबन्धस्य योगिनः ।
विश्वात्मा शिव एवाहमस्मीत्यर्थविचिन्तनम् ॥ ८५ ॥
एतदेव स्फुरद्रूपमात्मनो ज्ञानमुच्यते ॥ १७ ॥

---

किंचास्य प्रोक्तवैतर्कस्वात्मविज्ञानशालिनः ॥ ८६ ॥

## लोकानन्दः समाधिसुखम् ॥ १८ ॥

लोक्यं लोकयिता चेति लोकश्चेत्यचिदात्मनि ।
तत्तद्रूपतया तस्मिँल्लोके स्फुरति योगिनः ॥ ८७ ॥
'ग्राह्यग्राहकसंवित्तिः सामान्या सर्वदेहिनाम् ।
योगिनां तु विशेषोऽयं संबन्धे सावधानता' ॥ ८८ ॥
इत्युक्तनीत्या तत्सर्वमहमित्यनुसंहितेः ।
आनन्दो यो भवत्यन्तस्तत्समाधिसुखं स्मृतम् ॥ ८९ ॥
यत्समाधिसुखं तस्य स्वात्मारामस्य योगिनः ।
तदेव लोके लोकानामानन्दोऽन्तर्विचिन्वताम् ॥ ९० ॥

---

विभूतियोगमेतस्य दर्शयत्यथ योगिनः ।

## शक्तिसन्धाने शरीरोत्पत्तिः ॥ १९ ॥

इच्छा शक्तिरुमेत्यादिसूत्रोक्ता शक्तिरस्य या ॥ ९१ ॥
सन्धाने योगिनस्तस्यास्तन्मयीभावने सति ।
तद्वशात्तत्तदिच्छार्हशरीरोत्पत्तिरिष्यते ॥ ९२ ॥ १९ ॥

---

अन्याश्च सिद्धयस्तस्य संभवन्तीत्युदीर्यते ।

## भूतसंधान-भूतपृथक्त्व-विश्वसंघट्टाः ॥ २० ॥

भूतानां देहधीप्राणशून्यानां ग्राहकात्मनाम् ॥ ९३ ॥
ग्राह्याणां स्थावराणां च संधानं परिपोषणम् ।

पृथक्त्वमथ विश्लेषो व्याध्यादिक्लेशशान्तये ॥ ९४ ॥
विश्वस्य देशकालादिविप्रकृष्टस्य यत्पुनः ।
संघट्टश्चक्षुराद्यक्षप्रत्यक्षीकरणादिकम् ॥ ९५ ॥
एतत्सर्वं भवेच्छक्तिसंधाने सति योगिनः ॥ २० ॥

---

यदा परिमिताः सिद्धीरनिच्छन्पुनरिच्छति ॥ ९६ ॥
विश्वात्मताप्रथारूपां परां सिद्धिं, तदास्य तु ।

## शुद्धविद्योदयाच्चक्रेशत्वसिद्धिः ॥ २१ ॥

वैश्वात्म्यप्रथनाकाङ्क्षी सन्धत्ते शक्तिमात्मनः ॥ ९७ ॥
यदा योगी तदा तस्य सदाशिवपदस्पृशः ।
'ईश्वरो बहिरुन्मेषो निमेषोऽन्तः सदाशिवः ॥ ९८ ॥
सामानाधिकरण्यं च सद्विद्याहमिदंधियोः' ।
इति नीत्या जगत्सर्वमहमेवेति या मतिः ॥ ९९ ॥
सा शुद्धा निर्मला विद्या, तदीयादुदयात्स्फुटम् ।
उन्मज्जनात्स चिच्छक्तिमात्मनो नित्यमामृशेत् ॥ १०० ॥
यदा योगी, तदा तस्य चक्रेशत्वमनुत्तरम् ।
माहेश्वर्यं समावेशोत्कर्षात्सिध्यति योगिनः ॥ १०१ ॥

---

विश्वात्मकतदुत्तीर्णस्वात्मारामत्वमेव सः ।
इच्छति स्वच्छचिद्रूपो यदा योगी, तदास्य तु ॥ १०२ ॥

## महाह्रदानुसन्धानान्मंत्रवीर्यानुभवः ॥ २२ ॥

परा भट्टारिका संविदिच्छाशक्तिपुरःसरम् ।
स्थूलप्रमेयपर्यन्तं वमन्ती विश्वमान्तरम् ॥ १०३ ॥
प्रमात्रन्तर्बहीरूपहृषीकविषयात्मनाम् ।
खेचर्यादिप्रवाहाणां बाह्याभ्यन्तररूपिणाम् ॥ १०४ ॥
प्रवर्तकत्वात् स्वच्छत्वगम्भीरत्वादिधर्मतः ।
महाह्रदो जगद्व्यापी देशकालाद्यगोचरः ॥ १०५ ॥
अन्तस्तस्यानुसन्धानात्तादात्म्यस्यावमर्शनात् ।
अकारादिक्षकारान्तशब्दराशिप्रथात्मनः ॥ १०६ ॥
क्षित्यादिशिवपर्यन्ततत्त्वान्तःक्षोभकारिणः ।
मन्त्रवीर्यस्य सर्वेषां मन्त्राणां प्राणरूपिणः ॥ १०७ ॥
पराहन्तापरामर्शमयस्यानुभवः स्फुटम् ।
अखिलं वाचकं वाच्यमहमित्यवमर्शनम् ॥ १०८ ॥
योगिनः सावधानस्य भवतीत्येव शिष्यते ।
स्फुटीकरोमि संक्षेपात्तत्प्रमेयं पुरोदितम् ॥ १०९ ॥
महाह्रद इति प्रोक्ता शक्तिर्भगवती परा ।
अनुसन्धानमित्युक्तं तत्तादात्म्यविमर्शनम् ॥ ११० ॥
मन्त्रवीर्यमिति प्रोक्तं पूर्णाहन्ताविमर्शनम् ।
तदीयोऽनुभवस्तस्य स्फुरणं स्वात्मनः स्फुटम् ॥ १११ ॥

---

इति श्रीशाम्भवोपायप्रकाशनपरायणः ।
उन्मेषः प्रथमः सम्यक्स्वरूपोन्मेषलक्षणः ॥ ११२ ॥

---

इति श्रीकृष्णदासापरपर्यायवरदराजविरचिते
शिवसूत्रवार्तिके शाम्भवोपायप्रकाशनं
नाम प्रथम उन्मेषः ॥ १ ॥

अथ

# द्वितीय उन्मेषः

ईदृशं शाम्भवोपायं प्रदर्श्य परमेष्ठिना ।
इदानीमेतदन्तस्थशाक्तोपायः प्रदर्श्यते ॥ १ ॥

---

तत्र शक्तिर्महामन्त्रवीर्यविस्फाररूपिणी ।
इति प्राथमिकोन्मेषपर्यन्ते प्रकटीकृता ॥ २ ॥
तत्स्वातन्त्र्यं विविच्यादावुन्मेषान्तरमान्तरम् ।
सम्यग्दर्शयता मन्त्रस्वरूपं तावदीर्यते ॥ ३ ॥

**चित्तं मन्त्रः ॥ १ ॥**

चेत्यतेऽनेन परमं स्वात्मतत्त्वं विमृश्यते ।
इति चित्तं स्फुरत्तात्मप्रासादादिविमर्शनम् ॥ ४ ॥
तदेव मन्त्र्यते गुप्तमभेदेन विमृश्यते ।
स्वस्वरूपमनेनेति मन्त्रस्तेनास्य दैशिकैः ॥ ५ ॥
पूर्णाहन्तानुसंध्यात्मस्फूर्जन्मननधर्मता ।
संसारक्षयकृत्त्राणधर्मता च निरुच्यते ॥ ६ ॥
तन्मन्त्रदेवतामर्शप्राप्ततत्सामरस्यकम् ।
आराधकस्य चित्तं च मन्त्रस्तद्धर्मयोगतः ॥ ७ ॥

---

अस्य चोक्तस्य मन्त्रस्य मननत्राणधर्मिणः ।

## प्रयत्नः साधकः ॥ २ ॥

उक्तमन्त्रानुसन्धानावष्टम्भोद्यन्तृतात्मकः ॥ ८ ॥
प्रयत्नोऽन्तःस्वसंरम्भः स एव खलु साधकः ।
यतो मन्त्रयितुर्मन्त्रदेवतैक्यप्रदः स्मृतः ॥ ९ ॥ २ ॥

---

ईदृक्साधकसाध्यस्य मन्त्रस्य प्रथमोदितम् ।
वीर्यं विस्तरतः सम्यग् वर्ण्यतेऽथ सलक्षणम् ॥ १० ॥

## विद्याशरीरसत्ता मन्त्ररहस्यम् ॥ ३ ॥

विद्येति परमाद्वैतसंप्रवेदनरूपिणी ।
शरीरं यस्य भगवान् शब्दराशिः स उच्यते ॥ ११ ॥
तस्य सत्ता समस्ताध्वपूर्णाहन्तास्वरूपिणी ।
स्फुरत्ता सैव मन्त्राणां मननत्राणधर्मिणाम् ॥ १२ ॥
गुप्तार्थताया जननं रहस्यमिति कथ्यते ।
एतच्छ्रीक्षेमराजेन तन्त्रसारात्समुद्धृतैः ॥ १३ ॥
संवादैः संमतैः सम्यग्वर्णितं निजवृत्तिगैः ॥ ३ ॥

---

सम्यगेवंविधं मन्त्रवीर्यं येषां यथातथम् ॥ १४ ॥
महाह्रदानुसंधानप्रकारावेदितं त्वपि ।
इच्छयैव महेशस्य हृदयंगमतां दृढम् ॥ १५ ॥
न गच्छत्यथ तुच्छायां चित्तं सिद्धौ प्ररोहति ।
बिन्दुनादादिजातायां, तेषां तु मितयोगिनाम् ॥ १६ ॥

## गर्भे चित्तविकासोऽविशिष्टविद्यास्वप्नः ॥ ४ ॥

गर्भोऽख्यातिर्महामाया तन्मये सिद्धिसंचये ।
विकासो नाम चित्तस्य तावन्मात्रे कृतार्थता ॥ १७ ॥
सैवाविशिष्टा विद्येति किंचिज्ज्ञत्वस्वरूपिणी ।
अशुद्धविद्या सा स्वप्नो विकल्पप्रत्ययात्मकः ॥ १८ ॥ ४ ॥

---

आगता अपि ताः सिद्धीः खलीकृत्य यदा पुनः ।
अवष्टभ्नात्यसौ योगी परां सिद्धिं तदाश्नुते ॥ १९ ॥

## विद्यासमुत्थाने स्वाभाविके खेचरी शिवावस्था

विद्यायाः प्राक्समाख्यातरूपायाः शंकरेच्छया ।
स्वाभाविके समुत्थाने समुल्लासे स्वभावजे ॥ २० ॥
उन्मज्जने सति क्षुद्रसिद्धिमज्जनतत्परे ।
अवस्था या शिवस्यान्तरवस्थातुरभेदिनी ॥ २१ ॥
स्फुरत्ता सैव संपूर्णस्वानन्दोच्छलनात्मिकाम् ।
मुदं रातीत्यतो मुद्रा खेचरी च नभश्चरी ॥ २२ ॥
व्यज्यते योगिनो विश्वगं विश्वोत्तीर्णस्वरूपिणः ।

---

एवंप्रभावयोर्वीर्यासादने मंत्रमुद्रयोः ॥ २३ ॥

## गुरुरुपायः ॥ ६ ॥

सम्यग्ज्ञानक्रियाप्राणमन्त्रमुद्रायथास्थितिम् ।

गृणात्युपदिशत्यर्थं तद्वीर्यं चेत्यतो गुरुः ॥ २४ ॥
स एव मन्त्रमुद्राणां वीर्यव्याप्तिप्रकाशनात् ।
उपायः कथ्यते साक्षादुपेयं परमं प्रति ॥ २५ ॥
यद्वा गुरुः परा शक्तिरीश्वरानुग्रहात्मिका ।
अवकाशप्रदानेन सैव यायादुपायताम् ॥ २६ ॥ ६ ॥

---

'स गुरुर्मत्समः प्रोक्तो मन्त्रवीर्यप्रकाशकः ।'
'आदिमान्त्यविहीनास्तु मन्त्राः स्युः शरदभ्रवत् ॥ २७ ॥
गुरोर्लक्षणमेतावदादिमान्त्यं च वेदयेत् ।'
इति श्रीमालिनीशास्त्रसिद्धातन्त्रोक्तवैभवात् ॥ २८ ॥
अकृत्रिमाहमामर्शस्वरूपाद्यन्तवेदकात् ।
परमेष्ठिसमात्तस्मात्परमोपायतो गुरोः ॥ २९ ॥

## मातृकाचक्रसंबोधः ॥ ७ ॥

मन्त्रमुद्रानुसंधानसन्ततोद्युक्तचेतसः ।
भवत्युक्तगुरोः प्रीतात्साधकस्येति शिष्यते ॥ ३० ॥
'अथाद्यास्तिथयः सर्वे स्वरा विन्द्ववसानगाः ।
तदन्तः कालयोगेन सोमसूर्यौ प्रकीर्तितौ ॥ ३१ ॥
पृथिव्यादीनि तत्त्वानि पुरुषान्तानि पञ्चसु ।
क्रमात्कादिषु वर्गेषु मकारान्तेषु सुव्रते ॥ ३२ ॥
वाय्वग्निसलिलेन्द्राणां धारणानां चतुष्टयम् ।
तदूर्ध्वे शादि विख्यातं पुरस्ताद्ब्रह्मपञ्चकम् ॥ ३३ ॥
अमूला तत्क्रमाज्ज्ञेया क्षान्ता सृष्टिरुदाहृता ।

सर्वेषां चैव मन्त्राणां विद्यानां च यशस्विनि ॥ ३४ ॥
इयं योनिः समाख्याता सर्वतन्त्रेषु सर्वदा ।'
इति श्रीत्रीशिकाशास्त्रप्रोक्तन्यायेन मातृका ॥ ३५ ॥
अकारादिविसर्गान्तस्वरषोडशगर्भिणी ।
अत एवादिबिन्द्वन्तदशपंचतिथिक्रमा ॥ ३६ ॥
तदात्मकतदुत्तीर्णबिन्दुद्वन्द्वविभूषिता ।
अत एव जगत्सर्वं सृजत्यन्तरनुत्तरे ॥ ३७ ॥
तत्पंचदशकस्यान्तरुद्धृतैः पंचभिः स्वरैः ।
अ-इ-उ-ऋ-लृविन्यासैः कादिमान्तं च वाचकम् ॥ ३८ ॥
क्षित्यादिपुरुषान्तं च वाच्यं तत्त्वकदम्बकम् ।
पंचपंचकभेदेन पंचपंचविजृम्भितम् ॥ ३९ ॥
बहिश्चानुत्तरादेव सृजती विश्वमीदृशम् ।
वाय्वग्निसलिलेन्द्राणां क्रमाद् य-र-ल-वात्मनाम् ॥ ४० ॥
अनुत्तरेच्छोन्मेषाख्यत्रितयान्योन्यसंधितः ।
किंचानुत्तरषण्ढाख्यद्वयसंधिवशादपि ॥ ४१ ॥
उत्थितानां कलाविद्यामायारागाभिधायिनाम् ।
स्वरूपगोपनात्सर्वकर्तृत्वाद्यपसारतः ॥ ४२ ॥
खण्डितस्य पशोः किंचित्कर्तृत्वादिप्रदायिनाम् ।
मायोर्ध्वशुद्धविद्यादितत्त्वारोहनिरोधनात् ॥ ४३ ॥
मूलादधोऽवरोहस्य निरोधाच्च त्रिशङ्कुवत् ।
मध्ये संस्थापितस्यास्य धारणाद्धारणात्मनाम् ॥ ४४ ॥
'यतिस्तु भावाभावानां व्यवस्थोदयदायिनी ।
कालोऽपि तां महामायां स्वतन्त्रामनुवर्तते ॥' ४५ ॥
इत्युक्त्या कालनियतियुक्तत्वात् षड्विधात्मनाम् ।

स्फारयन्ती वपुः पश्चात्तदूर्ध्वं शादिपंचकम् ॥ ४६ ॥
सद्योजातादिकेशानपर्यन्तब्रह्मविग्रहम् ।
सूक्ष्मरूपमहीवारिवह्निवायुनभोमयम् ॥ ४७ ॥
क्रमेण शुद्धविद्येशसादशक्तिशिवात्मकम् ।
विस्फारयन्ती स्वान्तःस्थं विसर्गकलया बहिः ॥ ४८ ॥
कादिसान्ताक्षरान्तस्थः क्षकारोऽप्यन्तिमो यतः ।
अतोऽकारहकाराभ्यामहमित्यपृथक्तया ॥ ४९ ॥
प्रपंचं शिवशक्तिभ्यां क्रोडीकृत्य प्रकाशते ।
अस्यास्त्वेवंप्रभावायाश्चक्रं यत्तदिहोदितम् ॥ ५० ॥
अनुत्तरेच्छोन्मेषादिस्पन्दशक्तिकदम्बकम् ।
तत्संबोधश्चिदानन्दघनस्वात्मानुसंहितिः ॥ ५१ ॥ ७ ॥

---

अथेदृङ्मातृकाचक्रसंबोधोद्बोधितात्मनः ।

## शरीरं हविः ॥ ८ ॥

'शून्यं धीः प्राण इत्येतत्सृज्यते क्षीयतेऽपिच ॥ ५२ ॥
स्थैर्यमस्ति परं देहापेक्षया नतु तत्त्वतः ।'
इत्युक्तनीत्या शून्यादेः प्रमाता तस्य भित्तिभूः ॥ ५३ ॥
शरीरं स्थूलसूक्ष्मादि चिदग्नौ परयोगिनः ।
हूयमानं हविः प्रोक्तं तन्मातृत्वनिमज्जनात् ॥ ५४ ॥
परिपूर्णप्रकाशात्मप्रमात्रुन्मज्जनप्रदात् ॥ ८ ॥

---

एवं शरीरहव्येन ज्वलद्बोधोर्ध्वरोचिषः ॥ ५५ ॥

ज्ञानमन्नम् ॥ ९ ॥

ज्ञानं बन्ध इति प्रोक्तं यत्प्राक्तत्परयोगिनः ।
अनात्मन्यात्मताज्ञप्तिरन्नं ग्रस्यत इत्यतः ॥ ५६ ॥
किंच यद्यत्प्रकाशात्मस्वरूपामर्शनात्मकम् ।
ज्ञानं तत्परमाह्लादकारित्वादन्नमुच्यते ॥ ५७ ॥ ९ ॥

---

यदा त्ववहितः शश्वद्योगी नैवं भवत्यसौ ।
तदा ज्ञानवतोऽप्यस्य समाधानावलेपतः ॥ ५८ ॥

विद्यासंहारे तदुत्थस्वप्नदर्शनम् ॥ १० ॥

विद्येति ज्ञानविस्काररूपा या तु पुरोदिता ।
शुद्धविद्याथ संहारेऽनुत्थानेऽस्या निमज्जने ॥ ५९ ॥
तदुत्थस्य क्रमेणाश्वद्विद्यासंहारजन्मनः ।
स्वप्नस्य भेदनिष्ठस्य विकल्पौघस्य दर्शनम् ॥ ६० ॥
उन्मज्जनं भवत्यस्य प्राग्व्याख्यातोत्तमात्मनः ।
अवधानेऽवलिप्तस्य साधकस्येति शिष्यते ॥ ६१ ॥

---

इति द्वितीय उन्मेषः शाक्तोपायप्रकाशकः ॥ १० ॥

---

इति श्रीकृष्णदासापरपर्यायवरदराजविरचिते
शिवसूत्रवार्तिके शाक्तोपायप्रकाशनं
नाम द्वितीय उन्मेषः ॥ २ ॥

अथ

# तृतीय उन्मेषः

इदानीमाणवोपायं क्रमेण प्रतिपादयन् ।
अतिसंकुचितं तावत्स्वरूपं दर्शयत्यणोः ॥ १ ॥

आत्मा चित्तम् ॥ १ ॥

विशेषभोग्यशब्दादिवासनावेशरूपिनम् ।
तत्तदध्यवसायादिव्यापारकरणोन्मुखम् ॥ २ ॥
सत्त्वादिवृत्त्यवष्टम्भि बुध्यहंकृन्मनोमयम् ।
चित्तं तत्भोक्तृचैतन्यस्वरूपानवमर्शनात् ॥ ३ ॥
तत्तत्कर्मानुसारेण नानायोनीरनुव्रजन् ।
अततीत्यत एवात्मा ततः सोऽणुः प्रकीर्तितः ॥ ४ ॥
आत्मनश्चातनं नास्ति संविदेकस्वरूपिणः ।
अतश्चैतन्यमात्मेति धीक्रियात्मकमात्मनः ॥ ५ ॥
विश्वस्वभावभूतं तत्तात्त्विकं रूपमीरितम् ।
इदानीमेतदीयेन स्वातन्त्र्येणावभासिनात् ॥ ६ ॥
संकोचादणुतायोगाच्चित्तमात्मेति लक्षितम् ।
इति पूर्वापरादेशवैषम्यं नास्ति किंचन ॥ ७ ॥ १ ॥

---

अस्य चित्तस्वरूपस्य देहादेरात्मनस्त्वणोः ।

## ज्ञानं बन्धः ॥ २ ॥

अन्तः सुखादिसंवेद्यव्यवसायादिवृत्तिमत् ॥ ८ ॥
बहिस्तद्योग्यनीलादिदेहादिविषयोन्मुखम् ।
भेदाभासात्मकं चास्य ज्ञानं बन्धोऽणुरूपिणः ॥ ९ ॥
तत्पाशितत्वादेवासावणुः संसरति ध्रुवम् ॥ २ ॥

---

'ज्ञानं प्रकाशकं लोके आत्मा चैव प्रकाशकः ॥ १० ॥
अनयोरपृथग्भावाज्ज्ञानी ज्ञाने प्रकाशते ।'
इत्युक्तनीत्या ज्ञानं च स्वस्वरूपप्रकाशकम् ॥ ११ ॥
आत्मवत्तत्कथं तस्य बन्धकत्वप्रसञ्जिता ।
इत्याशङ्क्याह यद्येवं प्रसन्नात्परमेश्वरात् ॥ १२ ॥
प्रत्यभिज्ञा भवत्येषा तदा सत्यं त्वदीरितम् ।
तन्मायाशक्तितो नैष विमर्शोऽस्य यदा, तदा ॥ १३ ॥

## कलादीनां तत्त्वानामविवेको माया ॥ ३ ॥

अन्तरन्तःस्फुरत्किंचित्कर्तृत्वादिप्रदायिनाम् ।
कलादिक्षितिपर्यन्ततत्त्वानां कञ्चुकात्मनाम् ॥ १४ ॥
पुर्यष्टकमयत्वेन स्थूलदेहादिरूपतः ।
स्थितानामविवेकस्तेष्वात्मत्वेनानुसंहितिः ॥ १५ ॥
सैव संमोहिनी माया तत्त्वाख्यातिमयं जगत् ॥ ३ ॥

---

अतश्चैतज्जन्यमायाप्रशमायास्य योगिनः ॥ १६ ॥

## शरीरे संहारः कलानाम् ॥ ४ ॥

महाभूतात्मके स्थूले सूक्ष्मे पुर्यष्टकात्मनि ।
मूलादिसमनान्ते च शरीरे योगिनः परे ॥ १७ ॥
कलानां तत्र भागानां कार्याणां कारणे निजे ।
संहारः संविदेकाग्निसद्भावो लयचिन्तया ॥ १८ ॥
दाहाद्यामर्शयुक्त्या वा ध्यातव्य इति शिष्यते ॥ ४ ॥

---

एवं ध्यानाभिधानो यः संहारोपाय ईरितः ॥ १९ ॥
एवमेतत्प्रधानांश्च प्राणायामपुरःसरान् ।
अन्यान्समाधिपर्यन्तानुपायान्दर्शयत्यसौ ॥ २० ॥

## नाडीसंहार–भूतजय–भूतकैवल्य–भूतपृथक्त्वानि ॥ ५ ॥

भावनीयानि युक्तेन साधकेनेति शिष्यते ।
प्राणादिवाहिनाडीनां संहारः प्राणसंयमात् ॥ २१ ॥
रेचकादिक्रमोत्पादादुदानदहनात्मनि ।
मध्यनाड्यां विलीनत्वापादनं तन्मयत्वतः ॥ २२ ॥
भूतानां भूजलादीनां जयो यः स उदीर्यते ।
'वायवी धारणाङ्गुष्ठे आग्नेयी नाभिमध्यतः ॥ २३ ॥
माहेयी कण्ठदेशे तु वारुणी घण्टिकाश्रिता ।
आकाशधारणा मूर्ध्नि सर्वसिद्धिकरी स्मृता ॥' २४ ॥
इति स्वच्छन्दशास्त्रोक्तधारणाभिर्वशीकृतिः ।

भूतेभ्यः किल कैवल्यं चित्तप्रत्याहृतिस्ततः ॥ २५ ॥
पृथक्त्वं तदनालिप्तस्वच्छस्वात्मैकरूपता ।
'भूतसन्धान' इत्यादिसूत्रोक्तं यत्फलं पुरा ॥ २६ ॥
अप्रयत्नेन साध्यं तच्छाम्भवोपायशालिनः ।
आणवोपायसाध्यं तु यत्नेनेति विशिष्यते ॥ २७ ॥ ५ ॥

---

इत्येवं देहशुद्ध्याद्यैः समाध्यन्तैश्च या भवेत् ।
सिद्धिः सा मोहवरणान्नात्मज्ञानादितीर्यते ॥ २८ ॥

## मोहावरणात्सिद्धिः ॥ ६ ॥

मोहो विमोहिनी माया तत्कृतावरणात्किल ।
पूर्वोक्तधारणाद्युक्त्या सिद्धिः परिमिता भवेत् ॥ २९ ॥
तत्तत्तत्त्वोपभोगात्मा नत्वस्य परचित्प्रथा ॥ ६ ॥

---

विनष्टमोहावेशस्य समाधौ चाग्रतः पुनः ॥ ३० ॥
'मध्यमं प्राणमाश्रित्य प्राणापानपथान्तरम् ।
आलम्ब्य ज्ञानशक्तिं च तत्स्थं चैवासनं लभेत् ॥ ३१ ॥
प्राणादिस्थूलभावं तु त्यक्त्वा सूक्ष्ममथान्तरम् ।
सूक्ष्मातीतं तु परमं स्पन्दनं लभ्यते यतः ॥ ३२ ॥
प्राणायामः स उद्दिष्टो यस्मान्न च्यवते पुनः ।
शब्दादिगुणवृत्तिर्या चेतसा ह्यनुभूयते ॥ ३३ ॥
त्यक्त्वा तां परमं धाम प्रविशेत्तत्स्वचेतसा ।
प्रत्याहार इति प्रोक्तो भवपाशनिकृन्तनः ॥ ३४ ॥

धीगुणान्समतिक्रम्य निध्येयं चाव्ययं विभुम् ।
ध्यात्वा ध्येयं स्वसंवेद्यं ध्यानं तच्च विदुर्बुधाः ॥ ३५ ॥
धारणा परमात्मत्वं धार्यते येन सर्वदा ।
धारणा सा विनिर्दिष्टा भवबन्धविनाशिनी ॥ ३६ ॥
स्वपरस्थेषु भूतेषु जगत्यस्मिन्समानधीः ।
शिवोऽहमद्वितीयोऽहं समाधिः स परः स्मृतः ॥ ३७ ॥
इत्येवं मृत्युजित्तन्त्रभट्टारकनिरूपितैः ।
प्राणसंयमनारम्भैः समाध्यन्तैः क्रमैरपि ॥ ३८ ॥
परतत्त्वसमावेशो भवत्येवेति कथ्यते ।

## मोहजयादनन्ताभोगात्सहजविद्याजयः ॥ ७ ॥

मोहो माया निजाख्यातिस्तज्जयात्तत्पराभवात् ॥ ३९ ॥
उद्यमार्कोत्थितोऽनन्तः संस्कारप्रशमावधिः ।
आभोगो यस्य विस्तार ईदृशाद्दर्शितात्मनः ॥ ४० ॥
भवेत्सहजविद्याया जयो लाभोऽस्य योगिनः ॥ ७ ॥

---

एवं मोहजयोपात्तशुद्धविद्यामहोदयः ॥ ४१ ॥

## जाग्रद्द्वितीयकरः ॥ ८ ॥

भक्त्वैवं सहजां विद्यां तदेकत्वावलम्बने ।
जागरूकः सदा योगी जाग्रदित्ययमुच्यते ॥ ४२ ॥
संपूर्णाहंविमर्शात्मस्वाहन्तापेक्षया जगत् ।
द्वितीयमिदमाकारं करो यस्य स्वदीधितिः ॥ ४३ ॥

तथाभूतो भवत्येष स्वकरीभूतविष्टपः ॥ ८ ॥

---

ईदृशोऽयं सदा स्वात्मविमर्शावेशिताशयः ॥ ४४ ॥

## नर्तक आत्मा ॥ ९ ॥

नृत्यत्यन्तःपरिच्छन्नस्वस्वरूपावलम्बनाः ।
स्वेच्छया स्वात्मचिद्भित्तौ स्वपरिस्पंदलीलया ॥ ४५ ॥
जागरास्वप्नसौषुप्तरूपास्तास्ताः स्वभूमिकाः ।
आभासयति यत्तस्मादात्मा नर्तक उच्यते ॥ ४६ ॥ ९ ॥

---

एवंविधजगन्नाट्यनर्तकस्यास्य योगिनः ।
भूमिकाग्रहणस्थानं रङ्गमाह जगद्गुरुः ॥ ४७ ॥

## रङ्गोऽन्तरात्मा ॥ १० ॥

रज्यतेऽस्मिन् जगन्नाट्यक्रीडाकौतुकिनात्मना ।
इति रङ्गोऽन्तरात्मेति जीवः पुर्यष्टकात्मकः ॥ ४८ ॥
योगी कृतपदस्तत्र स्वेन्द्रियस्पन्दलीलया ।
सदाशिवादिचित्यन्तजगन्नाट्यं प्रकाशयेत् ॥ ४९ ॥ १० ॥

---

देहान्तरङ्गे रङ्गेऽस्मिन्नृत्यतः स्वान्तरात्मनि ।

## प्रेक्षकाणीन्द्रियाणि ॥ ११ ॥

प्रत्तकाणीति संसारनाट्यप्राकट्यकृद्वपुः ॥ ५० ॥
चक्षुरादीन्द्रियाण्यन्तश्चमत्कुर्वन्ति योगिनः ॥ ११ ॥

---

इत्येवं प्रेक्षकीभूतस्वात्मचक्रस्य योगिनः ॥ ५१ ॥

## धीवशात्सत्त्वसिद्धिः ॥ १२ ॥

धीस्तात्त्विकस्वचिद्रूपविमर्शकुशला मतिः ।
तद्वशादेव सत्त्वस्य स्पन्दस्यान्तर्विवर्तिनः ॥ ५२ ॥
स्फुरत्तारूपिणः सिद्धिरभिव्यक्तिः स्फुटं भवेत् ॥ १२ ॥

---

एवं निजस्फुरत्तात्मसत्त्वासादनवैभवात् ॥ ५३ ॥

## सिद्धः स्वतन्त्रभावः ॥ १३ ॥

सिद्धः संपन्न एवास्य भवेत्परमयोगिनः ।
स्वतन्त्रभावः सहजज्ञत्वकर्तृत्वलक्षणः ॥ ५४ ॥
स्वातन्त्र्यं वशिनो विश्वस्ववशीकरणक्षमम् ॥ १३ ॥

---

स्वतन्त्रभाव एवास्य स्वानन्दभरितात्मनः ॥ ५५ ॥

## यथा तत्र तथान्यत्र ॥ १४ ॥

यत्र स्वाभाविके देहे स्फुटीभूता स्वतन्त्रता ।
यथा तत्र तथान्यत्र देहे भवति योगिनः ॥ ५६ ॥

स्फुटीभवति युक्तस्य पूर्णाहन्तास्वरूपिणी ॥ १४ ॥

---

नचैवमप्युदासीनेन भाव्यं योगिनापितु ॥ ५७ ॥

बीजावधानम् ॥ १५ ॥

स्फुरत्तात्मा परा शक्तिर्बीजं विश्वस्य कारणम् ।
तत्रावधानं चित्तस्य भूयोभूयो निवेशनम् ॥ ५८ ॥
योगिना सावधानेन कर्तव्यमिति शिष्यते ॥ १५ ॥

---

एवंविधो महायोगी परशक्त्यवधानवान् ॥ ५९ ॥

आसनस्थः सुखं ह्रदे निमज्जति ॥ १६ ॥

आस्यते स्थीयते यस्मिन्नैकात्म्येनेति चासनम् ।
शाक्तं बलं यत्तत्रस्थस्तदेवान्तः परामृशन् ॥ ६० ॥
योगी परिहृतध्यानधारणादिपरिश्रमः ।
खेचर्यादिमहास्रोतोवाहप्रसरकारणे ॥ ६१ ॥
स्वच्छत्वादिगुणैर्युक्ते स्वानन्दभरिते ह्रदे ।
संप्लुतेदंपदद्वीपे संपूर्णे संविदर्णवे ॥ ६२ ॥
निरस्तसकलोपायो निमज्जति यथासुखम् ।
देहादिब्रोडनेनैव तन्मयीभवति स्फुटम् ॥ ६३ ॥ १६ ॥

---

इत्येवमाणवोपायासादितान्मोहनिर्जयात् ।
उन्मज्जच्छुद्धविद्यात्मशाक्तावेशप्रकर्षतः ॥ ६४ ॥

आत्मीकृतपरानन्दह्रदगाढावगाहनात् ।
प्रस्फुरच्छाम्भवावशवैभवः साधकोत्तमः ॥ ६५ ॥

## स्वमात्रानिर्माणमापादयति ॥ १७ ॥

स्वस्य संबन्धिनी मात्रा चैतन्यस्योक्तरूपिणः ।
आश्यानता मितात्मांशो ग्राह्यग्राहकलक्षणः ॥ ६६ ॥
निर्माणापादनं तस्या निर्मितत्वेन दर्शनम् ।
संपादयति योगीन्द्रो यथेष्टं स्पष्टमिच्छया ॥ ६७ ॥

---

एवमीदृशशक्त्युत्थविश्वरूपस्य योगिनः ।
पुनर्जन्मादिसंबन्धो न कश्चिदिति कथ्यते ॥ ६८ ॥

## विद्याऽविनाशे जन्मविनाशः ॥ १८ ॥

विद्येति सहजा तस्या अविनाशः सदोदयः ।
तेनैवाज्ञानसहकृत्तत्तत्कर्मानुषङ्गिणः ॥ ६९ ॥
देहप्राणमनीषादिसमुदायस्य जन्मनः ।
विनाशो मूलविध्वंसो भवत्यस्येति शिष्यते ॥ ७० ॥

---

यदा तु शुद्धविद्यायाः स्वरूपं तस्य मज्जति ।
तदा तन्मोहनायैव समुत्तिष्ठन्ति शक्तयः ॥ ७१ ॥

## कवर्गादिषु माहेश्वर्याद्याः पशुमातरः ॥ १९ ॥

कवर्गादिषु तिष्ठन्त्यस्तदधिष्ठातृतां गताः ।

माहेश्वर्यादिकाः प्रोक्तकरन्ध्रचितिमध्यगाः ॥ ७२ ॥
पशून्प्रमातृनाविश्य तत्तत्प्रत्ययभूमिषु ।
तत्तच्छब्दानुवेधेन मोहनात्पशुमातरः ॥ ७३ ॥
आवृण्वाना निजं रूपं चिदानन्दघनात्मकम् ।
अतिमानं विवृण्वानाः शरीरादौ जडेऽपिच ॥ ७४ ॥
पशुवत्साधकमपि प्रमत्तं मोहयन्त्यमूः ।
तस्माद्भाव्यं सदानेन सावधानेन योगिना ॥ ७५ ॥
उक्तं सामान्यतो ज्ञानाधिष्ठानं मातृकेत्यतः ।
इदं तु प्राप्ततत्त्वोऽपि प्रमाद्यन्साधकः पुनः ॥ ७६ ॥
पश्वधिष्ठानभूताभिर्मोह्यते मातृभिस्त्विति ॥ १६ ॥

---

यत एवमतः शुद्धविद्या प्राप्तापि युक्तिभिः ॥ ७७ ॥
बह्वीभिः सा पुनर्मौढ्याद्यथास्य न विनश्यति ।
तथा सर्वास्ववस्थासु युक्तो भूयादितीर्यते ॥ ७८ ॥

## त्रिषु चतुर्थं तैलवदासेच्यम् ॥ २० ॥

त्रिष्विति प्रोक्तरूपेषु जागरादिषु तैलवत् ।
चतुर्थमिति पूर्वोक्तं शुद्धविद्याप्रथात्मकम् ॥ ७९ ॥
तुर्यं धाम सदासेच्यं यथा स्यात्तन्मयं त्रयम् ।
यथा तैलं क्रमात्स्वीयमाश्रयं व्याप्नुयात्तथा ॥ ८० ॥
आद्यन्तकोट्योः स्फुरता जागरादेः परिस्फुटम् ।
तुर्यानन्दरसेनार्द्रीकुर्यान्मध्यदशामपि ॥ ८१ ॥
जाग्रदित्यादिसूत्रेण पूर्वमुद्यमवत्तया ।

शक्तिचक्रानुसन्धानशालिनः परयोगिनः ॥ ८२ ॥
स्वरसप्रसरज्जाग्रत्स्वप्नसौषुप्तभूमिषु ।
उदीरितः स्वतोनिर्यत्तुर्यप्रसरसंभवः ॥ ८३ ॥
त्रितयेत्यादिसूत्रेण शाम्भवोपायसाधितात् ।
हठपाकक्रमाज्जाग्रत्स्वप्नसौषुप्तसंहृतिः ॥ ८४ ॥
दर्शितानेन सूत्रेण त्वाणवोपाययुक्तितः ।
दलकल्पतयास्थायि जाग्रदादिपदत्रयम् ॥ ८५ ॥
सिञ्चेत्तुर्यरसेनेति विशेषः समुदीरितः ॥ २० ॥

---

अत्रोपायं पुनश्चाह तुर्यामृतनिषेचने ॥ ८६ ॥

**मग्नः स्वचित्तेन प्रविशेत् ॥ २१ ॥**

प्राणायामादिकं त्यक्त्वा स्थूलोपायं विकल्पकम् ।
अविकल्पकरूपेण स्वचित्तेन स्वसंविदा ॥ ८७ ॥
अन्तर्मुखपरामर्शचमत्काररसात्मना ।
मग्नस्तुर्यरसेनात्र स्वदेहादिप्रमातृताम् ॥ ८८ ॥
मज्जनेन प्रशमयन् प्रविशेत्तत्समाविशेत् ॥ २१ ॥

---

इत्थं परपदाविष्टबुद्धेर्वस्तुस्वभावतः ॥ ८९ ॥
यदा भूयः प्रसरणं योगिनो जायते, तदा ।

**प्राणसमाचारे समदर्शनम् ॥ २२ ॥**

प्राणस्य प्रस्फुरच्छाक्तसौरभावेशसंस्कृतेः ॥ ९० ॥

सम्यग्विकसिताशेषग्रन्थ्यवष्टम्भधीबलात् ।
ईषद्बहिर्मन्दमन्दं चारे प्रसरणे सति ॥ ६१ ॥
समं चिन्मुद्रनात्मत्वात्सर्वदाभेददर्शनम् ।
संवेदनं भवत्यर्थात्सर्वावस्थासु योगिनः ॥ ६२ ॥

---

तुर्यावष्टम्भतो लभ्यं तुर्यातीतमनामृशन् ।
पूर्वापरात्मनोः कोट्योः संवेद्ये तुर्यमात्रके ॥ ६३ ॥
आस्ते योगी, तदामुष्य तावन्मात्रेण तुष्यतः ।

## मध्येऽवरप्रसवः ॥ २३ ॥

पूर्वस्यामपरस्यां च कोटौ तुर्यनिषेविणः ॥ ६४ ॥
अवधानेऽवलिप्तस्य कदाचित्तस्य योगिनः ।
मध्यायामवरोऽश्रेष्ठः कुत्सितः सर्ग आपतेत् ॥ ६५ ॥
व्युत्थानात्मा, ततो योगी सावधानः सदा भवेत् ।

---

अवरप्रसवे वृत्ते ह्येवं मध्यपदे पुनः ॥ ६६ ॥
तुर्यावष्टम्भरसतस्तुर्यातीतं परामृशेत् ।

## मात्रास्वप्रत्ययसंधाने नष्टस्य पुनरुत्थानम् । २४ ।

मात्राः पदार्थाः रूपाद्यास्तास्वेभिश्चक्षुरादिभिः ॥ ६७ ॥
अक्षैः स्वप्रत्ययो नाम तत्तत्स्वग्राह्यवेदनम् ।
संधानं तु समस्तं तदहमित्यनुसंहितिः ॥ ६८ ॥
अमुष्मिन्सति नष्टस्य हारितस्योक्तवर्गतः ।

तुर्यस्य पुनरुत्थानं भूय उन्मज्जनं भवेत् ॥ ९९ ॥
तदैक्यसंपत्पूर्णत्वं योगीन्द्रस्येति शिष्यते ॥ २४ ॥

---

एवमुद्यत्समावेशप्रकर्षः साधकर्षभः ॥ १०० ॥

## शिवतुल्यो जायते ॥ २५ ॥

तुर्याभ्यासप्रकर्षेण तुर्यातीतात्मकं पदम् ।
संप्राप्तः साधकः साक्षात्सर्वलोकान्तरात्मना ॥ १०१ ॥
शिवेन चिन्मयस्वच्छस्वच्छदानन्दशालिना ।
तुल्योऽविगलनाद्देहकलाया गलने शिवः ॥ १०२ ॥

---

'अर्जितं दीक्षया दग्धं भविष्यन्ति यमादिभिः ।
येनेदं साधितं यत्र तद्भुक्त्या विनिवर्तते ॥' १०३ ॥
'अनेकभाविकं कर्म दग्धं बीजमिवाग्निना ।
भविष्यदपि संरुद्धं येनेदं तद्धि भोगतः ॥' १०४ ॥
इत्युक्तनीत्या प्रारब्धप्राप्तभोगोपभोगभूः ।
कलेवरस्थितिस्तस्य कर्तव्येत्युपदिश्यते ॥ १०५ ॥

## शरीरवृत्तिर्व्रतम् ॥ २६ ॥

एवं पूर्वोक्तया नीत्या शिवतुल्यस्य योगिनः ।
शश्वच्छिवात्मकस्वात्मसपर्यातत्परात्मनः ॥ १०६ ॥
'अन्तरुल्लसदच्छाच्छभक्तिपीयूषपोषितम् ।
भवत्पूजोपयोगाय शरीरमिदमस्तु मे ॥' १०७ ॥

इति लोकोत्तरश्रीमदुत्पलप्रोक्तया दिशा ।
शिवभक्तिसुधापूर्णे शरीरे वृत्तिरस्य या ॥ १०८ ॥
व्रतमेतदनुष्ठेयं न तुच्छं तस्य धारणम् ॥ २६ ॥

---

एवंविधस्य तस्यास्य या या स्वालापरूपिणी ॥ १०९ ॥

## कथा जपः ॥ २७ ॥

'महामन्त्रमयं नौमि रूपं ते स्वच्छशीतलम् ।
अपूर्वामोदसुभगं परामृतरसोल्वणम् ॥' ११० ॥
इति श्रीप्रत्यभिज्ञाकृद्दैशिकप्रोक्तया दिशा ।
अकृत्रिमाहमामर्शमयस्वात्मावमर्शिनः ॥ १११ ॥
या या स्वैराभिलापात्मा कथा याथार्थ्यवादिनः ।
'भूयोभूयः परे भावे भावना भाव्यते हि या ॥ ११२ ॥
जपः सोऽत्र स्वयं नादो मन्त्रात्मा जप्य ईदृशः ।'
'षट्शतानि दिवारात्रं सहस्राण्येकविंशतिः ॥ ११३ ॥
जपो देव्याः समुद्दिष्टः सुलभो दुर्लभो जडैः ।'
इत्युक्तनीत्या सा सर्वस्वात्मेशामर्शसंपदः ॥ ११४ ॥
जनिपालनधर्मत्वाज्जप इत्यभिधीयते ।
अथेदृग्विधयोगीन्द्रविषयापि च या कथा ॥ ११५ ॥
जपः सोऽपि जनस्योक्तो जनिपालनयोगतः ।

---

अथचास्योच्यते चर्या मर्यादानुविधायिनी ॥ ११६ ॥

## दानमात्मज्ञानम् ॥ २८ ॥

प्रोक्तचैतन्यरूपस्य साक्षात्करणमात्मनः ।
यत्तज्ज्ञानं तदेवास्य दानं यत्नेन दीयते ॥ ११७ ॥
परिपूर्णं स्वरूपं स्वं, दीयते खंड्यते भिदा ।
दायते शोध्यते रूपमात्मीयं, दीयते पुनः ॥ ११८ ॥
रक्ष्यते प्रत्यभिज्ञातः शिवात्मा स्वस्वभावता ।
दीयते चेति यत्नेन स्वात्मज्ञानमनुत्तरम् ॥ ११९ ॥
कृपया स्वात्मशिष्येभ्यस्तदनेनैव दीयते ॥ २८ ॥

---

एवं सम्यग्व्रतं प्रोक्तं जपं चर्यां च पालयन् ॥ १२० ॥
शिवतुल्यः सदा स्वात्मशिवाराधनतत्परः ।
अयमेव महायोगी महामन्त्रधुरन्धरः ॥ १२१ ॥
अन्तेवासिजनस्यान्तस्तत्त्वतस्तत्त्वबोधकः ।
इत्याह भगवानीशो नित्यानुग्रहकारकः ॥ १२२ ॥

## योऽविपस्थो ज्ञाहेतुश्च ॥ २९ ॥

अवीन्पशुजनान्पातीत्यविपं शक्तिमण्डलम् ।
माहेश्वर्यादिकं प्रोक्तं कवर्गाद्यधिदैवतम् ॥ १२३ ॥
अधितिष्ठति यः स्वैरमविपस्थः स उच्यते ।
जानातीत्यखिलं तत् ज्ञा ज्ञानशक्तिरुदीर्यते ॥ १२४ ॥
तस्या हेतुस्तया शिष्यान्प्रतिबोधयितुं क्षमः ।
अन्यस्तु शक्तिचक्रेण परतन्त्रीकृतत्वतः ॥ १२५ ॥
स्वात्मन्येवासमर्थः सन्कथमन्यान्प्रबोधयेत् ।
यच्छब्दापेक्षया सूत्रे तच्छब्दोऽध्याहृतः स्वयम् ॥ १२६ ॥
चशब्दो ह्यर्थवाच्यत्र यस्माज्ज्ञानप्रबोधने ।

योगी हेतुस्ततो दानमात्मज्ञानमितीरितम् ॥ १२७ ॥ २६ ।

---

इत्येवमविपस्थस्य ज्ञाहेतोरस्य योगिनः ।

स्वशक्तिप्रचयो विश्वम् ॥ ३० ॥

'शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः ॥' १२८ ॥
इत्यागमदिशा विश्वं स्वशक्तिप्रचयो यथा ।
शिवस्य, तत्समस्यापि तथास्य परयोगिनः ॥ १२६ ॥
स्वस्याः स्वात्माविमुक्तायाः शक्तेः संवेदनात्मनः ।
प्रचयः स्फुरणारूपो विकासो विश्वमिष्यते ॥ १३० ॥ ३० ॥

---

न परं सृष्ट्यवस्थायाममुष्य परयोगिनः ।
स्वशक्तिप्रचयो विश्वं यावत्तत्पृष्ठपातिनौ ॥ १३१ ॥

स्थितिलयौ ॥ ३१ ॥

स्वशक्तिप्रचयौ प्रोक्तौ तावपीत्यनुवर्तते ।
विकासितस्य विश्वस्य क्रियामय्या स्वसंविदा ॥ १३२ ॥
तत्तत्प्रमात्रपेक्षातः किंचित्कालमिदन्तया ।
या स्थितिश्चिन्मयाहंताविश्रान्त्यात्मा च यो लयः ॥ १३३ ॥
तावुभौ योगिनस्तस्य स्वशक्तिप्रचयात्मकौ ।
विकसत्संकुचत्सर्वं वेद्यं यत्संविदात्मकम् ॥ १३४ ॥
अन्यथा तस्य वेद्यस्य वेदनानुपपत्तितः ॥ ३१ ॥

---

ननु सृष्टिस्थितिध्वंसेष्वेवमन्योन्यभेदिषु ॥ १३५ ॥

अन्यथात्वं समायातं स्वस्वरूपस्य योगिनः ।
इत्याशङ्कानिवृत्त्यर्थं सूत्रमाह महेश्वरः ॥ १३६ ॥

## तत्प्रवृत्तावप्यनिरासः संवेत्तृभावात् ॥ ३२ ॥

तेषां सृष्ट्यादिभावानां प्रवृत्तावप्यनारतम् ।
उन्मज्जनेऽपि निष्कम्पयोगावष्टम्भशालिनः ॥ १३७ ॥
'अवस्थायुगलं चात्र कार्यकर्तृत्वशब्दितम् ।
कार्यता क्षयिणी तत्र कर्तृत्वं पुनरक्षयम् ॥ १३८ ॥
कार्योन्मुखः प्रयत्नो यः केवलं सोऽत्र लुप्यते ।
तस्मिंल्लुप्ते विलुप्तोऽस्मीत्यबुधः प्रतिपद्यते ॥ १३९ ॥
नतु योऽन्तर्मुखो भावः सर्वज्ञत्वगुणास्पदम् ।
तस्य लोपः कदाचित्स्यादन्यस्यानुपलम्भनात् ॥' १४० ॥
इति श्रीस्पन्दशास्त्रोक्तनीत्या तस्यास्य योगिनः ।
अनिरासः स्वसंवेत्तृभावादप्रच्युतिर्निजात् ॥ १४१ ॥
उद्यत्तुर्यचमत्कारादुपलब्धृस्वभावतः ।
निरासे तस्य सृष्ट्यादेः सृज्यस्याप्यप्रकाशनात् ॥ १४२ ॥

---

विश्वसृष्टिस्थितिध्वंसेष्वप्रकम्पस्य योगिनः ।

## सुखासुखयोर्बहिर्मननम् ॥ ३३ ॥

उत्तीर्णदेहप्राणादिप्रमातृत्वस्य धीमतः ॥ १४३ ॥
वेद्यस्पर्शजयोस्तस्य मननं सुखदुःखयोः ।
इदन्ताभासरूपेण नीलपीतादिवद्बहिः ॥ १४४ ॥

अहं सुखीति दुःखीति लोकवन्नत्वहन्तया ।
स्वशक्तिप्रचयो विश्वमिति सूत्रार्थनीतितः ॥ १४५ ॥
अहन्ताच्छादितत्वेन सर्वमस्य प्रकाशते ।
योगिनो लौकिकस्येव सुखाद्येव न केवलम् ॥ १४६ ॥
अतिक्रान्तमहामोहाक्रान्तदेहाद्यहंकृतिः ।
लोकवत्सुखदुःखाभ्यां कथं स्पृश्येत योगिराट् ॥ १४७ ॥

---

उदंचच्चित्प्रमातृत्वन्यंचत्पुर्यष्टकास्थितेः ।
यतो न तत्सुखाद्यन्तस्तत एवैष साधकः ॥ १४८ ॥

## तद्विमुक्तस्तु केवली ॥ ३४ ॥

ताभ्यां मुक्तो विशेषेण योगीन्द्रो यत्तयोर्यतः ।
संस्कारेणाप्यसंस्पृष्टः केवली चिन्मयः स्मृतः ॥ १४९ ॥
तुशब्दोऽन्तरमाख्याति वक्ष्यमाणव्यपेक्षया ।
एवमुत्तरसूत्रस्थोऽप्येतत्सूत्रव्यपेक्षया ॥ १५० ॥ ३४ ॥

---

तदेवाह तुशब्दोक्तमन्तरं चन्द्रशेखरः ।

## मोहप्रतिसंहतस्तु कर्मात्मा ॥ ३५ ॥

मोहः स्वाख्यातिरज्ञानं तेन यः प्रतिसंहतः ॥ १५१ ॥
तदेकघनतां प्राप्तस्ततो दुःखाद्युपाश्रयः ।
तत एव स कर्मात्मा शुभाशुभकलङ्कितः ॥ १५२ ॥ ३५ ॥

---

तस्यैवमीदृशस्यापि तत्तत्कर्मात्मनो यदा ।

अनर्गलमहेशानशक्तिपातात्समुन्मिषन् ॥ १५३ ॥
स्वातन्त्र्ययोगः सहजः प्रादुरस्ति, तदास्य तु ।

## भेदतिरस्कारे सर्गान्तरकर्मत्वम् ॥ ३६ ॥

भेदस्य देहप्राणादिमिताहंकृतिजन्मनः ॥ १५४ ॥
कलादिवलितभ्रान्तसकलाद्युचितात्मनः ।
तिरस्कारे स्थितस्यापि स्वोन्मेषादपहस्तने ॥ १५५ ॥
मन्त्रमन्त्रेशतादात्म्यस्वमाहात्म्यप्रकाशनात् ।
स्यात्सर्गान्तरकर्मत्वममुष्य परयोगिनः ॥ १५६ ॥
यथाभिलाषनिर्मेयनिर्मातृत्वं स्फुटं भवेत् ॥ ३६ ॥

---

नचैतदप्यसंभाव्यं स्रष्टृत्वं योगिनो यतः ॥ १५७ ॥

## करणशक्तिः स्वतोऽनुभवात् ॥ ३७ ॥

स्वतः स्वस्मादनुभवात् स्वप्नसंकल्पनादिषु ।
करणं निजसंवेद्यग्राह्यग्राहकनिर्मितिः ॥ १५८ ॥
शक्तिस्तत्कर्तृतोन्मेषः स्वसंवित्त्यैव सिध्यति ।
संभवन्तीं तथा सृष्टिं यदि दार्ढ्येन भावयेत् ॥ १५९ ॥
सर्वसाधारणाशेषनिर्मितिश्च भवेत्तदा ॥ ५७ ॥

---

यतः करणशक्त्यात्र शक्तिः स्वातन्त्र्यरूपिणी ॥ १६० ॥
प्रमातुर्बोधरूपस्य सारं, तस्मात्स्वमायया ।
तिरोहितायाः स्वातन्त्र्यशक्तेरुत्तेजनं प्रति ॥ १६१ ॥

## त्रिपदाद्यनुप्राणनम् ॥ ३८ ॥

त्रिपदं जागरास्वप्नसौषुप्तानामनुक्रमात् ।
प्रत्येकमादिमध्यान्तरूपं भंग्या निरूपितम् ॥ १६२ ॥
भावौन्मुख्यतदासक्तितदेकीकरणात्मकम् ।
सृष्टिस्थितिलयाकारं तुर्येणैव तदादिना ॥ १६३ ॥
तत्त्रयान्तश्चमत्काररसानन्दघनात्मना ।
माययाच्छादितेनापि तिरोधानस्वरूपया ॥ १६४ ॥
तत्तद्विषयभोगेषु विद्युद्वत्स्फुरता क्षणम् ।
अनुप्राणनमादध्यादवधानेन साधकः ॥ १६५ ॥
तेनैव जीवितेनापि जीवितस्य निजात्मनः ।
सम्यगुत्तेजनं कुर्याद्येनासौ तन्मयो भवेत् ॥ १६६ ॥
तुर्यानुप्राणनं प्रोक्तं जागरादौ पुरा त्रिषु ।
चतुर्थमिति सूत्रेण, त्रिपदेत्यादिनामुना ॥ १६७ ॥
जागराद्यादिमध्यान्तपर्वस्विति विशिष्यते ॥ ३८ ॥

---

अन्तर्मुखस्वरूपायामवस्थायां न केवलम् ॥ १६८ ॥
त्रिपदादिप्राणनमित्येतदुक्तमथापितु ।

## चित्तस्थितिवच्छरीरकरणबाह्येषु ॥ ३९ ॥

अनुप्राणनमित्येतदादद्यादिति शिष्यते ॥ १६९ ॥
अन्तर्मुखस्वरूपायां यथा चित्तस्थितौ तथा ।
अनुप्राणनमुक्तेन तुर्येणानन्दरूपिणा ॥ १७० ॥
कुर्याद्बहिर्मुखत्वेऽपि देहाद्यविषयात्मनि ।

तन्मयं भवतीत्यर्थात्तदा सर्वं चराचरम् ॥ १७१ ॥
एवं स्वानन्दरूपास्य शक्तिः स्वातन्त्र्यलक्षणा ।
यथेष्टभावनिर्माणकारिणी भवति स्फुटम् ॥ १७२ ॥ ३९ ॥

यदा पुनरसौ योगी प्रोक्तां तुर्यात्मिकां दशाम् ।
आन्तरीं नामृशत्यन्तस्तदा देहाद्यहंकृतेः ॥ १७३ ॥
अपूर्णम्मन्यतारूपादस्याणवमलात्मनः ।

## अभिलाषाद्बहिर्गतिः संवाह्यस्य ॥ ४० ॥

तत्त्वैः शक्तिगणाक्रान्तैर्धरण्यन्तैः कलादिभिः ॥ १७४ ॥
योनेर्योन्यन्तरं नेयः संवाह्यः पशुरुच्यते ।
तस्याणवमलाकारात् तत्तत्कर्मानुसारिणः ॥ १७५ ॥
अपूर्णम्मन्यतारूपादभिलाषाद्बहिर्गतिः ।
विषयोन्मुखतैवास्य नान्तस्तत्त्वानुसंहितिः ॥ १७६ ॥ ४० ॥

यदा पुनर्महेशानशक्तिपातवशोन्मिषत् ।
आत्मीयमेव विमृशन्नास्ते रूपं, तदास्य तु ॥ १७७ ॥
अभावादभिलाषस्य न बहिर्गतिरापतेत् ।
अपितूक्तचरस्वात्मारामतैवेति कथ्यते ॥ १७८ ॥

## तदारूढप्रमितेस्तत्क्षयाज्जीवसंक्षयः ॥ ४१ ॥

तदित्युक्तचरे धाम्नि संवेत्तृत्वस्वरूपिणि ।
आरूढा प्रमितिः संवित् तद्विमर्शनतत्परा ॥ १७९ ॥

यस्य तस्यास्य तदिति प्रोक्तागावमलात्मनः ।
अभिलाषस्य रूढस्य च्चयाज्जीवस्य संच्चयः ॥ १८० ॥
पुर्यष्टकस्वभावस्य प्रशमस्तत्त्वतो भवेत् ॥ ४१ ॥

---

प्राप्नोति देहपातोऽस्य नन्वेवं जीवसंच्चये ॥ १८१ ॥
नासौ कदापि कस्यापि दृश्यतेऽत्रापि योगिनः ।
तस्मात्कथं तदारूढप्रमितिः साधको भवेत् ॥ १८२ ॥
इत्याशंक्योत्तरं वक्ति भगवान्विश्वदैशिकः ।

## भूतकंचुकी तदा विमुक्तो भूयः पतिसमः परः ॥ ४२ ॥

तदेत्युक्ताभिलाषस्य प्रशमाज्जीवसंच्चये ॥ १८३ ॥
पुर्यष्टकप्रमातृत्वाभिमानगलनेऽप्यसौ ।
देहारम्भकैर्भूतैरस्पृशद्भिरहंपदम् ॥ १८४ ॥
कंचुकीव विशेषेण मुक्तो निर्वाणभाग्यतः ।
भूयो बाहुल्यतः पत्या समोऽयं परमेशिना ॥ १८५ ॥
तत्स्वरूपसमाविष्टचिदानन्दघनात्मकः ।
तत एव परः पूर्णः सम्यक्तन्मयतां गतः ॥ १८६ ॥ ४२ ॥

---

भूतकंचुकिताप्यस्य तदैव न निवर्तते ।
कस्मादित्यपि शंकायामुत्तरं वक्ति शंकरः ॥ १८७ ॥

## नैसर्गिकः प्राणसंबन्धः ॥ ४३ ॥

प्राणे परिणता संवित् प्रागिति प्रोक्तया दिशा ।
निसर्गात्सहजात्स्वस्य स्वातन्त्र्यादनिवारितात् ॥ १८८ ॥
चंचत्प्रपंचवैचित्र्यप्रकर्षकरणेच्छया ।
संकोचं परिगृह्णाना संविद्भगवती स्वयम् ॥ १८९ ॥
प्राप्नोति संकुचत्तत्तत्प्राणग्राहकभूमिकाः ।
उक्तमर्थं दृढीकर्तुं संवादः सोऽयमत्र तु ॥ १९० ॥
'या सा शक्तिः परा सूक्ष्मा व्यापिनी निर्मला शिवा ।
शक्तिचक्रस्य जननी परानन्दामृतात्मिका ॥ १९१ ॥
महाघोरेश्वरी चंडा सृष्टिसंहारकारिका ।
त्रिवहं त्रिविधं त्रिष्ठं बलात्कालं प्रकर्षति ॥' १९२ ॥
इति वाजसनेयायामियमेव चितिः परा ।
स्वातन्त्र्येणावरुह्य प्राक् प्राणरूपे प्रमातरि ॥ १९३ ॥
चन्द्रभास्करवह्न्यात्मनाडीत्रितयवाहिनम् ।
अन्तर्बहिर्विशन्निर्यन्निश्वासोच्छ्वासलक्षणम् ॥ १९४ ॥
अतीतवर्तमानादित्रिविधं कालमात्मनि ।
कर्षन्त्यन्तर्बहिश्चेति कथ्यते कालकर्षिणी ॥ १९५ ॥
ततो नैसर्गिकस्तस्याः प्राणसंबन्ध आगतः ॥ ४३ ॥

---

स्थितेऽपि प्राणसंबन्धे यस्तदारूढ आन्तरीम् ॥ १९६ ॥
संविदं विमृशन्नास्ते स लोकोत्तरतां व्रजेत् ।
इत्युपायोपसंहारमुखेनाह महेश्वरः ॥ १९७ ॥

## नासिकान्तर्मध्यसंयमात् किमत्र सव्यापसव्यसौषुम्नेषु ॥ ४४ ॥

नेत्रादिरोमरन्ध्रान्तनाडीनां निविडात्मनाम् ।
सर्वासां मुख्यभूतेषु सर्वावष्टम्भदायिषु ॥ १९८ ॥
सव्यापसव्यसौषुम्ननाडीमार्गेषु सर्वदा ।
नाडीनां नासिका प्राणशक्तिः कुटिलवाहिनी ॥ १९९ ॥
अन्तरित्यान्तरी संवित् तत्स्वरूपस्य यत्पुनः ।
मध्यं सर्वान्तरत्वेन प्रधानं विश्वभित्तिकम् ॥ २०० ॥
परामर्शमयं रूपमुत्तीर्णं, तस्य संयमात् ।
निभालनप्रकर्षोत्थात् स्वात्मबुद्धिविमर्शनात् ॥ २०१ ॥
किमत्र संयमे वाच्यमियमेव समाहितिः ।
देदीप्यमाना सर्वासु दशास्वन्तर्निरन्तरम् ॥ २०२ ॥
निर्व्युत्थानावधानेन योगिनैवानुभूयते ॥ ४४ ॥

---

'मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ॥ २०३ ॥
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ।'
इति श्रीभगवद्गीताप्रोक्तनीत्यनुसारतः ॥ २०४ ॥
विश्वोत्तीर्णनिजाहन्तासमावेशितचेतसः ।
पर्यन्ते योगिनो योगफलं सम्यक् प्रदर्शयन् ॥ २०५ ॥
उपसंहरति श्रीमानुक्तं प्रकरणं शिवः ।

## भूयः स्यात्प्रतिमीलनम् ॥ ४५ ॥

पुनश्च प्रोक्तचैतन्यस्वरूपोन्मीलनात्मकम् ॥ २०६ ॥
परयोगाधिरूढस्य भवेत्परमयोगिनः ।
भूयः स्यादिति वाक्यस्य स्फुटमेवायमाशयः ॥ २०७ ॥
यच्छिवत्वममुष्योक्तं नापूर्वं तत्तु योगिनः ।
स्वभाव एव, तन्मायाशक्तिप्रोत्थापिताग्निजात् ॥ २०८ ॥
नायं विकल्पदौरात्म्याद्भासमानमपि स्वतः ।
विम्रष्टुं क्षम इत्यस्य प्रोक्तोपायक्रमेण तत् ॥ २०९ ॥
शिवत्वं व्यक्तिमेतीति शिवेनोदीरितं शिवम् ।
इत्युन्मेषस्तृतीयोऽयमाणवोपायसूचकः ॥ २१० ॥

---

इति श्रीशिवसूत्राणां रहस्यार्थोपबृंहितम् ।
प्रागुक्तवार्तिकांशेन सहितं वार्तिकान्तरम् ॥ २११ ।
अखण्डसंवित्साम्राज्ययौवराज्याधिकारिणाम् ।
पराक्रमहठाक्रान्तषट्त्रिंशत्तत्त्वसंपदाम् ॥ २१२ ॥
मधुराजकुमाराणां महाहन्ताधिरोहिणाम् ।
पश्चिमेन तदालोकध्वस्तपश्चिमजन्मना ॥ २१३ ॥
मया वरदराजेन मायामोहापसारकम् ।
श्रीक्षेमराजनिर्णीतव्याख्यानाध्वानुसारिणा ॥ २१४ ।
कृतिना कृष्णदासेन व्यञ्जितं कृपयाञ्जसा ।
अनुगृह्णन्तु नामैतत् सन्तः सन्तोषमागताः ॥ २१५ ॥

---

इति श्रीकृष्णदासापरपर्यायवरदराजविरचिते
शिवसूत्रवार्तिके आणवोपायप्रकाशनं
नाम तृतीय उन्मेषः ॥ ३ ॥

---

समाप्तं चेदं शिवसूत्र-
वार्तिकम् ।

---

श्रीमत्प्रतापभूभर्तुराज्ञया प्रीतये सताम् ।
मधुसूदनकौलेन सम्पाद्येदं प्रकाशितम् ॥